॥ ओ३म् ॥

# * पाठपुस्तकम् *



कश्मीर मर्कन्टाइल प्रेस ने
मुद्रितकरके प्रकाशित किया
संवत् १९९०

द्वितीयावृत्तिः १००० मूल्यम् [illegible]

# प्रस्तावना



इह पाठपुस्तक विशेष करके इस निमित्त मुद्रि[illegible] की है, कि बालकगण प्रातःसमय स्नान सन्ध्या [illegible] अनन्तर देवता का ध्यान करके अध्ययन करें, जि[illegible] से सर्व क्लेशनाश होजाए। गतसमय कश्मीर मण्डल में नित्यकर्म तथा होम इत्यादि से किसी प्रकार की व्याधि या क्लेश नहीं हुआ करते थे। अद्यतनसमय में नित्यकर्म ईश्वर ध्यानभी मनुष्यों से पृथक् होगया है। इसी कारण सविनय इह पाठपुस्तक सज्जन पुरुषों की सेवा में अर्पण करते हैं, कि वह अपने बालकों को पाठ कण्ठ करायें, कि जो उनको वृद्ध अवस्था में भी अध्यवसाय रहे। इति,

एस० एन० शास्त्री

सा०भू०,सा०म०,

॥ ओ३म् ॥

अथ

# ॥ गणेशस्तोत्रप्रारम्भः ॥

श्रीगणेशाय नमः

ॐ बिभ्रद्दक्षिणहस्तपद्मयुगले दन्ताक्षसूत्रे शुभे
वामे मोदकपूर्णपात्रपरशू नागोपवीती त्रिदृक् ।
श्रीमान्सिंहयुगासनः श्रुतियुगे शंखौ वहन्मौलिमान्
दिश्यादीश्वरपुत्र एष भगवाँल्लम्बोदरः शर्म नः ॥ १ ॥

गणानामधिपश्चण्डो गजवक्त्रस्त्रिलोचनः । प्रसन्नो भव-तां नित्यं वर दाता विनायकः ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लम्बोदरश्च विकटो विघ्नराजो ग-णाधिपः ॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि गणेशस्य महात्मनः ॥ यः पठे-च्छृणुयाद्वापि सर्वविघ्नहराणि वै । विद्यारम्भे विवाहे

च प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते । मुख्यद्वादश नामानि गणेशस्य समाहितः । यः पठेत्तु शिवोक्तानि स लभेत्सिद्धिमुत्तमाम् । प्रथमं वक्रतुण्डं तु चैकदन्तं द्वितीयकम् ॥ तृतीयं कृष्णपिङ्गं तु चतुर्थं तु कपर्दिनम् । लम्बोदरं पञ्चमं तु षष्ठं विकटमेव च ॥ सप्तमं विघ्नराजेन्द्रं धूम्रवर्णं तथाष्टमम् । नवमं भालचन्द्रं तु दशमं तु विनायकम् ॥ एकादशं गणपतिं द्वादशं मन्त्रनायकम् । पठते शृणुते यस्तु गणेशस्तवमुत्तमम् ॥ विद्यार्थी लभते विद्यां पुत्रार्थी पुत्रमुत्तमम् । भार्यार्थी लभते भार्यां मोक्षार्थी परमं पदम् ॥

इति गणेशस्तोत्रम् ॥

सिन्दूरकुंकुमहुताशनविद्रुमार्करक्ताब्जदाडिमनिभाय चतुर्भुजाय । हेरम्बभैरवगणेश्वरनायकाय सर्वार्थसिद्धिफलदाय गणेश्वराय ॥ चिदचित्पदगम्भीरं गमागमपदोज्झितम् गहनाकाशसंकाशं वन्दे देवं गणेश्वरम् ॥

श्रीसनत्कुमार उवाच । शङ्कराद्ब्रह्मणा प्राप्तं पद्मयोने-
र्मया प्रभोः । तदहं कीर्तयिष्यामि स्तोत्रं परमदुर्लभम् ॥
षष्ठ्यां चतुर्थ्यामष्टम्यां चतुर्दश्यां विशेषतः । पूजयेच्च
गणाध्यक्षं श्रद्धाभक्तिसमन्वितः ॥ अर्घैः पुष्पैस्तथा
धूपैर्दीपैर्माल्यैश्च चामरैः । वस्त्रैः कुण्डलकेयूरैर्मौलिभिश्च
वितानकैः ॥ भक्ष्यैर्भोज्यैरपूपैश्च मत्स्यैर्मांसैश्च मोदकैः ।
पानकैः फलमूलैश्च होमैर्मन्त्रादिभिस्तथा ॥ गङ्गाहृदे तु
गाङ्गेयं श्रीशैले तु गणेश्वरम् । वाराणस्यां गजवक्त्रं ग-
यायां टङ्कधारिणम् ॥ प्रयागे तु गणाध्यक्षं केदारे
विकटाननम् । लम्बोदरं कुरुक्षेत्रे नैमिषे च मदोत्कटम् ॥
जम्बुकं दंडकारण्ये लोकेशं हिमवद्गिरौ । विश्वक्सेनं तु
विन्ध्याद्रौ मलये हेमकुंभकम् ॥ नायकं पुष्करद्वीपे
विघ्नेशं शल्मले स्थितम् । इलावृते विश्वरूपं हरिवर्षे
घटोदरम् ॥ त्रिनेत्रं सिंहलद्वीपे श्वेतद्वीपे तु वामनम् ।
उज्जयिन्यां च लम्बोष्ठं मालवे शूर्पकर्णकम् ॥ सौराष्ट्रे
वरदं देवं कश्मीरे भीमरूपिणम् । सिन्धुसागरयोर्मध्ये

स्थितं वै मन्त्रनायकम् ॥ हर्यक्षं यक्षभवने हरियक्षा-
भिधं विभुम् । पद्माभरणनामानं कैलासे परमेश्वरम् ॥
महायोगं महेन्द्रे च सह्ये वाराहरूपिणम् । महोदरं च
लुम्पायां चम्पायां शिखिवाहनम् ॥ पाशहस्तं त्रिकूटे
च पूजयेत्सर्व्वसिद्धिदम् । बलमग्निगुहायां च पाटले सिं-
हवाहनम् ॥ पौण्ड्रे रौद्रमुखं चापि कलापिग्रामके जयम् ।
मेरुपृष्ठे कामरूपं नन्दनं नन्दने वने ॥ विजयं वै ग-
न्धवने देवदारुवने गणम् । आर्तानां विघ्नहरणं गङ्गा-
सागरसङ्गमे ॥ महापथे विरूपाक्षं चित्रकूटे मदोत्कटम् ।
दुर्जयं यमुनातीरे स्तम्भनं गन्धमाधने ॥ भद्रवटे चा-
म्बरीशं मोहनं हस्तिनापुरे । किष्किन्दायामुग्रकेतुं ल-
ङ्कायां तु विभीषणम् ॥ कलिङ्गे वरुणं चैव गान्धारे
च मदोत्कटम् । अश्वत्थं च तुरुष्केषु चीने शत्रुजयावहम् ॥
वज्रहस्तं कोसलेषु दाक्षिणात्येषु लोहितम् । शूलोद्धृ-
तकरं चैव मध्यदेशे प्रकीर्तितम् ॥ एकदंष्ट्रं पश्चिमाब्धौ
पूर्वदेशे पराजितम् । उत्तरे चारुवक्त्रं च वरिष्ठं त्रिपुरेषु च ॥

सुवर्णगर्भं विघ्नेशं नदीनां सङ्गमे स्थितम् । गिरिसन्धिषु विज्ञेयं हिरण्यकवचाभिधम् ॥ सुमुखं नागरन्ध्रेषु नर्मदायां च षड्भुजम् । महापुरे महामायां भद्रकर्णे ह्रदे शिवम् ॥ गोकर्णे गजकर्णं तु कान्यकुब्जे वराननम् । पद्मासनं कामरूपे श्रीमुखं सर्वतः स्थितम् ॥ वेदवेदांगशास्त्रेषु पूजयेद्ब्रह्मणस्पतिम् । अष्टाषष्टिस्तु नामानि स्तुतान्यद्भुतकर्मणः ॥ नित्यं प्रभातकाले तु चिन्तयेद्गणनायकम् । एतत्स्तोत्रं पवित्रं च मङ्गल्यं पापनाशनम् ॥ शस्त्र-खाखोंद-वेताल-यक्ष रक्षो भयापहम् । चौरारण्यभयव्याघ्रव्याधिदुर्भिक्षनाशनम् ॥ कृत्यादिमायाशमनं सर्वशत्रुविमर्दनम् । त्रिकालं यः पठेद्भक्त्या स भवेत्सर्वसिद्धिभाक् ॥ गणेश्वरप्रसादेन लभते शाङ्करं पदम् ॥

इति आदित्यपुराणे गणेशस्तोत्रम् ॥

ॐ नमो विघ्नहर्त्रे ।

ॐ अप्रमेयगुणं नित्यं गणेशममरोत्तमम् । वेदान्तवेद्यं सर्वज्ञं पूजितममरेश्वरैः ॥ ॐकारं परमंब्रह्म अक्षरं शि-

वमव्ययम् । पार्वतीप्रियपुत्रं तं प्रणमामि गणेश्वरम् ॥ ब्र-
ह्मद्वयानवच्छेद्यं शिवाद्वयविबोधितम् । स्वप्रकाशं परा-
त्मानं तं प्रपद्ये विनायकम् ॥ वैरिविघ्नप्रदं नित्यं भ-
क्तानां सिद्धिदायकम् । शिवसूनुं परानन्दं नमस्यामि
विनायकम् ॥ मोदकाहारपरममक्षमालाकरं परम् । त्रिने-
त्रं गजवक्त्रं च तं प्रपद्ये गणेश्वरम् ॥ स्वदन्तं परशुं
चैव धारयन्तं भुजद्वये । रक्तवस्त्राम्बरधरं रक्तमालाधरं
विभुम् ॥ विघ्नराशीन्विकिरन्तं करक्षेपैर्मुहुर्मुहुः । अनन्तं
परमं तत्त्वं सारात्सारतरं परम् ॥ अप्रमेयगुणायापि त्र्य-
क्षाय वरवर्णिने । विनायकाय देवाय भूयो भूयो नमो
नमः ॥ श्रीगणेशं नुमो यस्य प्रसादात्प्राप्तबुद्धयः । प्रौ-
ढबुद्धिषु हृष्यन्ति मादृशा अपि बालिशाः ॥ श्रीगणेश्वरं
भक्तकामदं श्रीकृपानिधिं सर्वसिद्धिदम् । ब्रह्मविष्णुदेवे-
न्द्रगोनुतं भक्तवत्सलं नौम्युमासुतम् ॥ वारणाननं वार-
णाधिपदारुणं बलात्सिद्धिकारणम् । तारणं भवाद्विघ्नवा-
रणं भक्तवत्सलं नौम्युमासुतम् ॥ शङ्कराङ्कतोवातरन्मुदा

शैलजाग्रतो हर्षयन्नुभौ । षण्मुखेन यो नृत्यते गिरौ भक्तवत्सलं तं नमाम्यहम् ॥ शैलजासुतं विश्वमोहनं भक्तवत्सलं कल्मषापहम् । सिद्धिदायकं विघ्ननाशकं नौम्यहं सुरैर्वन्द्यपादुकम् ॥ श्रीतपस्विनोऽचिन्त्यपौरुषं यं विचिन्त्य प्राक्सर्वसिद्धिदम् । सिद्धवाञ्छितास्ते भवन्ति तं भक्तवत्सलं नौम्युमासुतम् ॥ यत्पदाब्जपीठासनंगणौमौलिकोटिभिवन्दितं मुहुः । प्राप्तसिद्धयस्ते भवन्ति तं भक्तवत्सलं नौम्युमासुतम् ॥ दैवतैर्दितेरात्मजैर्नरैर्नागचारणैर्भूतकिन्नरैः । गुह्यकादिभिर्वन्दितं सदा भक्तवत्सलं नौम्युमासुतम् ॥ चिन्तितं नरैः सिद्धनायकैर्मुक्तयेऽब्जजेनापि सृष्टये । त्रैपुरं च हन्तुं शिवेन वै भक्तवत्सलं नौम्युमासुतम् ॥ पाहि पाहि मां विघ्ननायक रक्ष रक्ष मां विघ्ननाशक । देव देव त्वां विश्वपूजित भक्तवत्सलं नौम्युमासुतम् ॥ पाहि मां विभो दीनपालक रक्ष मां प्रभो दीनवत्सल । देहि सम्पदं ह्यापदं हर भक्तवत्सलं नौम्युमासुतम् ॥

योऽभ्यर्चितः सुरगणैर्वरसिद्धिहेतो-
श्छेत्तुं भयानि च करे परशुं दधानः ।
देवः स शम्भुदयितापरिवर्द्धितश्री-
र्विघ्नान्निवारयतु वारणराजवक्त्रः ॥
नमताशेषविघ्नौघवारणं वारणाननम् । कारणं सर्वसिद्धीनां दुरितार्णवतारणम् ॥ इति गणेशस्तोत्रम् ॥

अथ ब्राह्मीविद्या ।

ओं ओं ओं त्रिगुणपुरुष क्षेत्रचर मोहं भिन्धि रजस्तमसी भिन्धि प्राकृतं पाशजालं सावरणं परिहर सत्त्वं ग्रहाण पुरुषोत्तमोऽसि सोमसूर्यानल प्रवर परमधामन्ब्रह्मविष्णुमहेश्वररूप सृष्टिस्थितिसंहारकारक भ्रूमध्य निलय तेजोऽसि धामासि महात्मन् ओं तत्सत् ३ ओं हंसः शुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् परंब्रह्मस्वरूप सर्वगत सर्वशक्ते सर्वेश्वर सर्वग्रन्थिभेदनं कुरु २ परमपदं परामर्ष ब्रह्मद्वारं सर कुमार्गं

जहि षाट्कोशकं शरीरं त्यज शुद्धोऽसि बुद्धोऽसि विमलोसि क्षमस्व स्वपदमासादय स्वाहा ॥ ओं हंसो नारायणः प्रोक्तो हंस आत्मेति निश्चितम् । स एवात्मा स भगवान्विष्णुस्तद्ब्रह्म सर्वगम् ॥ इमां महाब्रह्मविद्यां प्रातः काले पठेत्तु यः । स याति परमं स्थानं यत्र गत्वा न शोचते ॥ इति ब्राह्मीविद्यासमाप्ता ॥

## अथ कैवल्योपनिषत् ।

कैवल्योपनिषद्वेद्यं कैवल्यानन्दतुन्दिलम् । कैवल्यगिरिजारामं स्वमात्रं कलयेऽन्वहम् ॥ ओं सहनाववतु सह नौ भुनक्तु सह वीर्य्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ओं शान्तिः शान्तिः शान्तिः ॥ ओं अथाश्वलायनो भगवन्तं परमेष्ठिनमुपसमेत्योवाच । अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम् । यया चिरात्सर्व्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान् ॥ १ ॥ तस्मै सहोवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवैहि । न कर्म्मणा न प्र-

जया धनेन त्यागेनैकेनामृतत्वमानशुः ॥ २ ॥ परेण
नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ।
वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्ध-
सत्त्वाः ॥ ३ ॥ ते ब्रह्मलोकेषु परान्तकाले परामृताः
परिमुच्यन्ति सर्वे । विविक्तदेशे च सुखासनस्थः शुचिः
समग्रीवशिरःशरीरः ॥ ४ ॥ अत्याश्रमस्थः सकले-
न्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य । हृत्पुण्ड-
रीके विरजं विशुद्धं विचिन्त्य मध्ये विषदं विशोक-
म् ॥ ५ ॥ अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्त-
ममृतं ब्रह्मयोनिम् । तथादिमध्यान्तविहीनमेकं विभुं
चिदानन्दमरूपमद्भुतम् ॥ ६ ॥ उमासहायं परमेश्वरं
प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनि-
गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ ७ ॥
स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्र-
माः ॥ ८ ॥ स एव सर्वं यद्भूतं यच्च भव्यं सना-

तनम् । ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमु-
क्तये ॥ ९ ॥ सर्वभूतस्थमात्मानं सर्वभूतानि चा-
त्मनि । सम्पश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥१०॥
आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ज्ञाननि-
र्मथनाभ्यासात्पापं दहति पण्डितः ॥ ११ ॥ स एव
मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमे-
ति ॥ १२ ॥ स्वप्ने स जीवः सुखदुःखभोक्ता स्व-
मायया कल्पितजीवलोके । सुषुप्तिकाले सकले विली-
ने तमोऽभिभूतः सुखरूपमेति ॥ १३ ॥ पुनश्च ज-
न्मान्तरकर्म्मयोगात्स एव जीवः स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीवस्ततस्तुजातं सकलं विचि-
त्रम् ॥ १४ ॥ आधारमानन्दमखण्डबोधं यस्मिँल्लयं
याति पुरत्रयं च । यत्रैव तेजांसि मनांसि विश्वं म-
त्यन्तभावं विरहेण योगिनाम् ॥ १५ ॥ एतस्माज्जा-
यते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योति-

रापश्च पृथ्वी विश्वस्य धारिणी ॥ १६ ॥ यत्परं ब्रह्म सर्व्वात्मा विश्वस्यायतनं महत् । सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ १७ ॥ जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते । तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १८ ॥ त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदा शिवः ॥ १९ ॥ मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्व्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ २० ॥ इति प्रथमः खण्डः ॥ १ ॥

अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विचित्रम् । पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ॥ १ ॥ अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः । अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम् ॥ २ ॥ वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् । न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धि-

रस्ति ॥ ३ ॥ न भूमिरापो न च वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च । एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ॥ ४ ॥ समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् । ध्यायेज्जगद्बीजं जगन्निवासं विश्वं जुहोति वसुधादिशिवावसानम् ॥ यश्च शतरुद्रियमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आत्मपूतो भवति स सुरापानात्पूतो भवति स ब्रह्महत्यायाः पूतो भवति स सुवर्णस्तेयात्पूतो भवति स कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेत् ॥ अनेन ज्ञानमाप्नोति संसारार्णवतारकम् । तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते ॥ कैवल्यं फलमश्नुते इति ॥ ५ ॥ इति द्वितीयः खण्डः ॥२॥
ॐ सहनाववत्विति शान्तिः ॥

इत्यथर्ववेदे कैवल्योपनिषत्समाप्ता ।

———

॥ अथ नारायणाथर्वशिरउपनिषत् ॥

मायातत्कार्यमखिलं यद्बोधाद्यात्यपह्नवम् ।
त्रिपान्नारायणाख्यं तत्कलये स्वात्ममात्रतः ॥

ॐ सहनाववत्विति शान्तिः ।

ॐ अथ पुरुषो ह वै नारायणोऽकामयत । प्रजाः सृजेयेति । नारायणात्प्राणो जायते । मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी ॥ नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते । नारायणात्प्रजापतिः प्रजायते । नारायणादिन्द्रो जायते । नारायणादष्टौ वसवः । नारायणादेकादश रुद्राः । नारायणाद्द्वादशादित्याः । सर्वा देवताः । सर्वे ऋषयः । सर्वाणि च्छन्दांसि । सर्वाणि च भूतानि नारायणादेव समुत्पद्यन्ते । नारायणात्प्रवर्तन्ते । नारायणे प्रलीयन्ते । एतदृग्वेदशिरोऽधीते ॥ १ ॥ अथ नित्यो देव एको नारायणो ब्रह्मा च नारायणः । शिवश्च नारायणः । शक्रश्च नारायणः । वसवोऽश्विनौ च नारा-

यणः । सर्वे ऋषयश्च नारायणः । कालश्च नारायणः । दिशश्च नारायणः । विदिशश्च नारायणः । ऊर्ध्वं च नारायणः । अधश्च नारायणः । अन्तर्बहिश्च नारायणः । नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम् ॥ नित्यो निष्कलो निष्कलङ्को निराख्यातो निर्विकल्पो निरञ्जनः । शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् ॥ य एवं वेद । स विष्णुरेव भवति । स विष्णुरेव भवति ॥ रुद्रं स्वसारथिं कृत्वा मनः प्रग्रहवान्पुमान् । प्रयाति परमं पारं विष्ण्वाख्यं पदमव्ययम् ॥ एतद्वै नारायणस्योपनिषत् । यो ह वै नारायणस्योपनिषदमधीते स सर्वेभ्यः पापेभ्यो विमुक्तो भवति । स सर्वान्कामानाप्नोति । ब्रह्मत्वं च गत्वाऽमृतत्वं च गच्छति । एतद्यजुर्वेदशिरोऽधीते ॥ २ ॥

ओमित्येतदग्रे व्याहरेत् ॥ नम इति पश्चात् । नारायणायेत्युपरिष्टात् । ओमित्येकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि । एतद्वै नारा-

यणस्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमधीते सोऽनुपप्लुवः । सर्वमायुरेति विन्दते प्रजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते । ततोऽमृतत्वमश्नुत इति ॥ एतत्सामवेदशिरोऽधीते ॥ ३ ॥ प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् । अकार उकार मकार इति । तान्येकदा समभवत्तदेतदोमिति यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् । ॐ नमो नारायणायेति मन्त्रोपासको वैकुण्ठभुवनं गमिष्यतीति । तदिदं परं पुरुषं पुण्डरीकाक्षं विज्ञानघनम् । तस्मात्तडिदाभासमात्रम् । ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः । ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरुच्यत इति ॥ सर्वभूतस्थमेकं वै नारायणं कारणपुरुषमकारणं परंब्रह्मोमिति । एतदथर्वशिरोधीऽते ॥ ४ ॥ स पापोऽपापो भवति सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । तत्सायं प्रातरधीयानोऽपापो भवति । मध्यन्दिनमादि-

थाभिमुखमधीयानः पञ्चभ्यः पातकाऽतिपातकमहापा-
तकोपपातकाऽनुपातकेभ्यः प्रमुच्यते सर्ववेदपारायणपु-
ण्यं लभते । श्रीनारायणचरणकमलसायुज्यमाप्नोति ।
श्रीनारायणचरणकमलसायुज्यमाप्नोति ॥ य एवं वेद ॥

समाप्तेयमथर्ववेदे नारायणोपनिषत् ॥

अथ सप्तश्लोकीगीताप्रारम्भः ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् । यः प्रयाति
त्यजन्देहं स याति परमां गतिम् ॥ १ ॥ स्थाने हृषी-
केश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च । रक्षांसि
भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसं-
घाः ॥ २ ॥ सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ३ ॥ कविं
पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः । सर्वस्य
धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ४ ॥
ऊर्ध्वमूलमधः शाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य
पर्णानि यस्तं वेद स वेदवित् ॥ ५ ॥ सर्वस्य चाहं

हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ ६ ॥ मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ७ ॥

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सप्तश्लोकीगीता समाप्ता ॥

## अथ रामाष्टकम् ॥

ओं श्रीरामचन्द्राय नमः ॥ श्रीराम राम रघुनन्दन राम राम श्रीराम राम भरताग्रज राम राम । श्रीराम राम रणकर्कश राम राम श्रीराम राम शरणं भव राम राम ॥ १ ॥ श्रीराम राम दिविजेश्वर राम राम श्रीराम राम मनुजेश्वर राम राम । श्रीराम राम जगदीश्वर राम राम श्रीराम राम शरणं भव राम राम ॥ २ ॥ श्रीराम राम विबुधाश्रय राम राम श्रीराम राम जगदाश्रय राम राम । श्रीराम राम कमलाश्रय राम राम श्रीराम राम शरणं भव राम राम ॥ ३ ॥

श्रीराम राम गुणसागर राम राम श्रीराम राम गु-
णभूषण राम राम । श्रीराम राम गुणभाजन राम
राम श्रीराम राम शरणं भव० ॥ ४ ॥ श्रीराम राम
शुभमङ्गल राम राम श्रीराम राम शुभलक्षण राम
राम । श्रीराम राम शुभदायक राम राम श्रीराम
राम शरणं भव० ॥ ५ ॥ श्रीराम राम स्वजनप्रिय
राम राम श्रीराम राम सुमुनिप्रिय राम राम । श्रीराम
राम सुकविप्रिय राम राम श्रीराम राम शरणं भव
राम राम ॥ ६ ॥ श्रीराम राम कमलाकर राम राम
श्रीराम राम कमलेक्षण राम राम । श्रीराम राम क-
मलाप्रिय राम राम श्रीराम राम शरणं भव० ॥ ७ ॥
श्रीराम राम दनुजान्तक राम राम श्रीराम राम दुरि-
तान्तक राम राम । श्रीराम राम नरकान्तक राम राम
श्रीराम राम शरणं भव० ॥ ८ ॥ श्रीरामचन्द्रः स
पुनातु नित्यं यन्नाममध्येन्द्रमणिं विधाय । श्रीच-
न्द्रमुक्ताफलयोरुमायाश्चकार कण्ठाभरणं गिरीशः ॥ ९ ॥

श्रीरमचन्द्रचरणौ मनसा स्मरामि श्रीरामचन्द्रचरणौ वचसा गृणामि । श्रीरामचन्द्रचरणौ शिरसा नमामि श्रीरामचन्द्रचरणौ शरणं प्रपद्ये ॥ १० ॥

रामाष्टकमिदं पुण्यं प्रातःकाले तु यः पठेत् ।
मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥

इति श्रीरामाष्टकं संपूर्णम् ॥

## अच्युताष्टकम् ।

श्रीगणेशाय नमः । अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवं हरिम् । श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचन्द्रं भजे ॥ १ ॥ अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाराधितम् । इन्दिरामन्दिरं चेतसा सुन्दरं देवकीनन्दनं नन्दजं संदधे ॥२॥ विष्णवे जिष्णवे शङ्खिने चक्रिणे रुक्मिणीरागिणे जानकीजानये । वल्लवीवल्लभायार्चितायात्मने कंसविध्वंसिने वंशिने ते नमः ॥ ३ ॥ कृष्ण गोविन्द हे राम नारायण श्रीपते वासुदेवाजित श्रीनिधे । अच्युतानन्त हे

माधवाधोक्षज द्वारकानायक द्रौपदीरक्षक ॥ ४ ॥ राक्ष-
सक्षोभितः सीतया शोभितो दण्डकारण्यभूपुण्यताका-
रणः । लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्त्यसंपूजितो
राघवः पातु माम् ॥ ५ ॥ धेनुकारिष्टकोऽनिष्टकृद्द्वेषिणां
केशिहा कंसजिद्वंशिकावादकः । पूतनाकोपकः सूरजाखे-
लनो बालगोपालकः पातु मां सर्वदा ॥ ६ ॥ विद्युदु-
द्द्योतवत्प्रस्फुरद्वाससं प्रावृडंभोदवत्प्रोल्लसद्विग्रहम् । व-
न्यया मालया शोभितोरःस्थलं लोहिताङ्घ्रिद्वयं वारिजा-
क्षं भजे ॥ ७ ॥ कुंचितैः कुन्तलैर्भ्राजमानाननं रत्नमौलिं
लसत्कुण्डलं गण्डयोः । हारकेयूरकं कङ्कणप्रोज्ज्वलं किं-
किणी मञ्जुलं श्यामलं तं भजे ॥ ८ ॥ अच्युतस्याष्टकं
यः पठेदिष्टदं प्रेमतः प्रत्यहं पूरुषः सस्पृहम् । वृत्ततः सु-
न्दरं कर्तृविश्वम्भरं तस्य वश्यो हरिर्जायते सत्वरम् ॥९॥

इति श्रीशङ्कराचार्यविरचितमच्युताष्टकं संपूर्णम् ॥

## अथ त्रिपुरसुन्दरीस्तोत्रम् ॥

नमः त्रिपुरसुन्दर्यै ॥ कदम्बवनचारिणीं मुनिकदम्ब-

कादम्बिनीं नितम्बजितभूधरां सुरनितम्बिनीसेविताम् । नवांबुरुहलोचनामभिनवांबुदश्यामलां त्रिलोचनकुटुंबिनीं त्रिपुरसुन्दरीमाश्रये ॥ १ ॥ कदम्बवनवासिनीं कनकवल्लकीधारिणीं महार्हमणिहारिणीं मुखसमुल्लसद्वारुणीम् । दयाविभवकारिणीं विशदलोचनीं चारिणीं त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ २ ॥ कदम्बवनशालया कुचभरोल्लसन्मालया कुचोपमितशैलया गुरुकृपालसद्वेलया । मदारुणकपोलया मधुरगीतवाचालया कयापि घननीलया कवचिता वयं लीलया ॥ ३ ॥ कदम्बवनमध्यगां कनकमण्डलोपस्थितां षडम्बुरुहवासिनीं सततसिद्धसौदामिनीम् । विडम्बितजपारुचिं विकचचन्द्रचूडामणिं त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ ४ ॥ कुचांचितविपञ्चिकां कुटिलकुन्तलालङ्कृतां कुशेशयनिवासिनीं कुटिलचित्तविद्वेषिणीम् । मदारुणविलोचनां मनसिजारिसंमोहिनीं मतङ्गमुनिकन्यकां मधुरभाषिणीमाश्रये ॥ ५ ॥ स्मरेत्प्रथमपुष्पिणीं रुधिरबिन्दु-

नीलांबरां गृहीतमधुपात्रिकां मधुविघूर्णनेत्राञ्चलाम् । घनस्तनभरोन्नतां गलितचूलिकां श्यामलां त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥ ६ ॥ सकुंकुमविलेपनामलकचुम्बिकस्तूरिकां समंदहसितेक्षणां सशरचापपाशाङ्कुशाम् । अशेषजनमोहिनीमरुणमाल्यभूषाम्बरां जपाकुसुमभासुरां जपविधौ स्मराम्यम्बिकाम् ॥ ७ ॥ पुरन्दरपुरन्ध्रिकाचिकुरबन्धसैरन्ध्रिकां पितामहपतिव्रतां पटुपटीरचर्चारताम् । मुकुन्दरमणीं मणीलसदलंक्रियाकारिणीं भजामि भुवनाम्बिकां सुरवधूटिकाचेटिकाम् ।८।

इति त्रिपुरसुन्दरीस्तोत्रं संपूर्णम् ॥

## अथ गणेशाष्टकम् ।

श्रीगणेशाय नमः ॥ देवा ऊचुः । यतोऽनन्तशक्तेरनंताश्च जीवा यतो निर्गुणादप्रमेया गुणास्ते । यतो भाति सर्वं त्रिधा भेदभिन्नं सदा तं गणेशं नमामो भजामः ॥१॥ यतश्चाविरासीज्जगत्सर्वमेतत्तथाब्जासनो विश्वगो विश्वगोप्ता । तथेन्द्राद्यो देवसङ्घा मनुष्याः सदा तं गणेशं

नमामो भजामः ॥ २ ॥ यतो वह्निभानू भवो भूर्जलं च यतः सागराश्चन्द्रमा व्योम वायुः । यतः स्थावरा जङ्गमा वृक्षसङ्घाः सदा तं गणेशं नमामो भजामः ॥ ३ ॥ यतो दानवाः किन्नरा यक्षसङ्घा यतश्चारणा वारणाः श्वापदाश्च । यतः पक्षिकीटा यतो वीरुधश्च सदा तं गणेशं नमामो भजामः ॥ ४ ॥ यतो बुद्धिरज्ञाननाशो मुमुक्षोर्यतः सम्पदो भक्तसन्तोषिकाः स्युः । यतो विघ्ननाशो यतः कार्यसिद्धिः सदा तं गणेशं नमामो भजामः ॥ ५ ॥ यतः पुत्रसंपद्यतो वाञ्छितार्थो यतोऽभक्तविघ्नास्तथाऽनेकरूपाः । यतः शोकमोहौ यतः काम एव सदा तं गणेशं नमामो भजामः ॥ ६ ॥ यतोऽनन्तशक्तिः स शेषो बभूव धराधारणेऽनेकरूपी च शक्तः । यतोऽनेकधा स्वर्गलोका हि नाना सदा तं गणेशं नमामो भजामः ॥ ७ ॥ यतो वेदवाचोतिकुंठा मनोभिः सदा नेति नेतीति यत्ता गृणंति । परब्रह्मरूपं चिदानंदभूतं सदा तं गणेशं नमामो भजामः ॥ ८ ॥ श्रीगणेश उवाच ।

पुनरूचे गणाधीशः स्तोत्रमेतत्पठेन्नरः । त्रिसन्ध्यं त्रि-
दिनं तस्य सर्वकार्यं भविष्यति ॥ ९ ॥ यो जपेदष्ट-
दिवसं श्लोकाष्टकमिदं शुभम् । अष्टवारं चतुर्थ्यां तु
सोऽष्टसिद्धीरवाप्नुयात् ॥ १० ॥ यः पठेन्मासमात्रं तु द-
शवारं दिनेदिने । स मोचयेद्बन्धगतं राजवध्यं न सं-
शयः ॥ ११ ॥ विद्याकामो लभेद्विद्यां पुत्रार्थी पुत्रमा-
प्नुयात् । वाञ्छितांल्लभते सर्वानेकविंशतिवारतः ॥१२॥
यो जपेत्परया भक्त्या गजाननपरो नरः । एवमुक्त्वा
ततो देवश्चान्तर्धानं गतः प्रभुः ॥ १३ ॥

इति श्रीगणेशपुराणे उपासनाखण्डे
श्रीगणेशाष्टकं संपूर्णम् ॥

## अथ नवग्रहस्तोत्रप्रारम्भः ॥

ॐ नमः सूर्याय ॥ जपाकुसुमसङ्काशं काश्यपेयं महा-
द्युतिम् । तमोरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥१॥
दधिशङ्खतुषाराभं क्षीरोदार्णवसंभवम् । नमामि शशिनं

सोमं शंभोर्मुकुटभूषणम् ॥ २ ॥ धरणीगर्भसंभूतं विद्यु-
त्कान्तिसमप्रभम् । कुमारं शक्तिहस्तं तं मङ्गलं प्रणमाम्य-
हम् ॥ ३ ॥ प्रियङ्गुकलिकाश्यामं रूपेणाप्रतिमं बुधम् ।
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ॥ ४ ॥
देवानां च ऋषीणां च गुरुं काञ्चनसंनिभम् । बुद्धिभू-
तं त्रिलोकेशं तं नमामि बृहस्पतिम् ॥ ५ ॥ हिमकुन्द-
मृणालाभं दैत्यानां परमं गुरुम् । सर्वशास्त्रप्रवक्तारं भार्गवं
प्रणमाम्यहम् ॥ ६ ॥ नीलाञ्जनसमाभासं रविपुत्रं य-
माग्रजम् । छायामार्तण्डसंभूतं तं नमामि शनैश्वरम्
॥ ७ ॥ अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ।
सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहम् ॥ ८ ॥ पा-
लाशपुष्पसंकाशं तारकाग्रहमस्तकम् । रौद्रं रौद्रात्मकं
घोरं तं केतुं प्रणमाम्यहम् ॥ ९ ॥ इति व्यासमुखो-
द्गीतं यः पठेत्सुसमाहितः । दिवा वा यदि वा रात्रौ
विघ्नशान्तिर्भविष्यति ॥ १० ॥ नरनारीनृपाणां च
भवेद्दुःस्वप्ननाशनम् । ऐश्वर्यमतुलं तेषामारोग्यं पु-

ष्टिवर्द्धनम् ॥ ११ ॥ ग्रहनक्षत्रजाः पीडास्तस्कराग्नि-
समुद्भवाः । ताःसर्वाः प्रशमं यान्ति व्यासो ब्रूते न
संशयः ॥ १२ ॥

इति श्रीवेदव्यासविरचितं आदित्यादि-
नव ग्रहस्तोत्रं संपूर्णम् ॥

॥ ततो नैवेद्यम् ॥

ॐ अमृतेशमुद्रयाऽमृतीकृत्य अमृतमस्तु । अमृतायता नैवेद्यं सावित्राणि सावित्र्यस्य देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे । महागणपतये कुमाराय श्रियै सरस्वत्यै लक्ष्म्यै विश्वकर्म्मणे द्वारदेवताभ्यः । प्रजापतये ब्रह्मणे कलशदेववताभ्यः ब्रह्माविष्णु महेश्वरदेवताभ्यः । चतुर्वेदेश्वराय सानुचराय ऋतुपतये नारायणाय । दुर्गायै त्र्यम्बकाय वरुणाय यज्ञपुरुषाय अग्निष्वात्तादिभ्यः पितृगणदेवताभ्यः । भगवते वासुदेवाय० लक्ष्मीसहिताय

नारायणाय । भवाय देवाय० पार्वतीसहिताय परमेश्वराय । विनायकाय० वल्लभासहिताय महागणेशाय । क्लीं कां कुमाराय० सेनाधिपतये कुमाराय । ह्रांह्रींसः सूर्याय० प्रभासहिताय आदित्याय । भगवत्यै अमायै कामायै चार्वङ्ग्यै टंकधारिण्यै तारायै पार्वत्यै यक्षिण्यै श्रीशारिकाभगवत्यै० सहस्रनाम्न्यै देव्यै भवान्यै । अभयङ्कर्य्यै भगवत्यै । क्षेमङ्कर्य्यै भवान्यै । सुरशत्रुघातिन्यै । इहराष्ट्राधिपतये भैरवाय । इन्द्रादिभ्यो दशलोकपालेभ्यः । अनन्तादिभ्य अष्टाभ्यः कुलनागदेवताभ्यः । आदित्यादिभ्य एकादश ग्रहेभ्यः । ब्रह्मणे कूर्माय ध्रुवाय अनन्ताय हरये लक्ष्म्यै कमलायै । शिक्षादिभ्यः पञ्चचत्वारिंशद्वास्तुष्पतियागदेवताभ्यः । ब्राह्मयादिभ्यो मातृभ्यः । गौर्य्यादिभ्यो मातृभ्यः । ललितादिभ्यो मातृभ्यः । दुर्गाक्षेत्रगणेश्वरदेवताभ्यः । राकादेवताभ्यः । त्रिकादेव० सिनीवालीदेवताभ्यः कुहूदेव० यामीदेव० रौद्रीदेव० ऐन्द्रीदेव० वारुणीदे-

व० बार्हस्पत्यदेव० ॥ ओं भूर्देवताभ्यः ओं भुवर्देव०
ओं स्वर्देव० ओं भूर्भुवःस्वर्देव० अखण्डब्रह्माण्डयाग-
देवताभ्यः धूर्भ्यः उपधूर्भ्यः महागायत्र्यै सावित्र्यै स-
रस्वत्यै ॥ उत्पन्नमऽमृतं दिव्यं प्राक्क्षीरोदधिमन्थना-
त् । अन्नममृतरूपेण नैवेद्यं प्रतिगृह्यताम् ॥ ओं तत्स-
द्ब्रह्माद्यतावत्तिथावद्यामुकमासस्यामुकपक्षस्य तिथावमु-
ष्यायामात्मनो वाङ्मनःकायोपार्जितपापनिवारणार्थं श्री-
नारायणप्रीत्यर्थं नमो नैवेद्यं निवेदयामि नमः ॥ आका-
शमातृभ्योऽन्नं नमः । समालभनं गन्धो नमः । अर्घो
नमः पुष्पं नमः । योऽस्मिन्निवसति क्षेत्रे क्षेत्रपालः
किंकरः । तस्मै निवेदयाम्यद्य बलिं पानीयसंयुताम् ॥
क्षं क्षेत्राधिपतयेऽन्नं नमः । रां राष्ट्राधिपतयेऽन्नं नमः ।
अभयवरप्रद मयि पुष्टिं पुष्टिपतिर्ददातु ॥

इति निवेदनमन्त्राः ॥



